॥ श्रीवरदराजाचार्यविरचिता ॥

# लघुसिद्धान्तकौमुदी

तिङन्ते

## नामधातु-कणवादयः

लघुकौमुदी के ३५ संस्करणों पर आधारित रंगीन संस्करण

इस विषय के शोधपूर्ण सरलव्याख्यान पद्धति पर आधारित वीडियो हमारे चैनल पर उपलब्ध हैं।




संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

**परामर्शकौ**

प्रो. ब्रजभूषणओझा

प्रो. नीलाभतिवारी

इन स्लाइड्स के माध्यम से पढ़ने के लिए अथवा इनकी व्याख्या देखने के लिए हमारे चैनल का अनुसरण करें।




YouTube संस्कृतसारः @sanskrit sar

**प्रस्तोता**


डॉ. श्रीओमशर्मा (व्याकरणविद्याशाखा)

केन्द्रीयसंस्कृतविश्वविद्यालयः,



श्रीरघुनाथकीर्तिपरिसरः देवप्रयागः (उत्तराखण्डः)

# निवेदनम्

यह पठन-पाठनसामग्री ‘संस्कृतव्याकरण’ में शीघ्र प्रवेशेच्छुक-छात्राध्यापकों के हेतु ‘संस्कृतसारः’ इस समाजसेवी संस्था द्वारा संस्कृतभाषा की सेवार्थ प्रस्तुत की जा रही है। अतः आपसे निवेदन है कि इन ‘लघुसिद्धान्तकौमुदी’ स्लाइड्स् व वीडियोज् का अपने पठन-पाठन में पर्याप्त उपयोग कर संस्कृत की सेवा में हमारा सहयोग करें। इन स्लाइड्स् को शुद्धतम बनाने का प्रयास करने पर भी ऐसा सम्भव है कि इसमें कहीं त्रुटि रह गयी हों अतः उनके सुधार के लिए हमें ईमेल द्वारा सूचित करें।



दिनाङ्कः-

16.06.2022

अस्माकं सम्पर्कसूत्राणि—
e-mail अणुवाक्— samskritsaarah@gmail.com
YOUTUBE — संस्कृतसारः @sanskrit sar
FACEBOOK— @sanskrit_shiksha संस्कृतशिक्षा

निवेदकः-

संस्कृतशिक्षा-परिवारः

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

आतिदेशिकधातुप्रकरणे

# नामधातवः

नाम= प्रातिपदिकानि एव धातवः

अर्थाः




- ✓ सुपः आत्मनः क्यच्
- ✓ काम्यच्च




- ✓ तत्करोति तदाचष्टे— णिच्




- ✓ उपमानादाचारे— क्यच्
- ✓ सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः




- ✓ शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे — क्यङ्




- ✓ कष्टाय क्रमणे— क्यङ्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# नामधातूनां सार्थप्रयोगविवरणम्

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते नामधातवः)

इच्छायामेषितुः स्वार्थे क्यच्काम्यौ कर्मणः परे।
आचारे चोपमानात् क्यच् तथाधिकरणादपि॥१॥
शब्दादेः करणे क्यङ् स्यात् सुखादिभ्यश्च वेदने।
वाष्पोष्मादेरुद्वमने रोमन्थात् वर्त्तने तथा॥२॥
उपमानाच्च कर्त्तुः क्यङ् आचारार्थे प्रजायते।
भृशादिभ्यश्च्व्यर्थ एव क्यङन्तादात्मनेपदम्॥३॥

१. आत्मनो यशः इच्छति— यशस्यति,यशस्काम्यति। शिष्यं पुत्रमिवाचरति पुत्रीयति शिष्यम्। प्रासादे इवाचरति प्रासादीयति कुटीरे भिक्षुः।

२. शब्दं करोति— शब्दायते रासभः। सुखमनुभवति सुखायते साधुः वाष्पमुद्वमति वाष्पायते जलम्। रोमन्थं वर्तयति रोमन्थायते गौः।

३. पण्डित इव आचरति— पण्डितायते मूर्खः। अभृशं भृशं भवति भृशायते दुःखम्।

वह्निस्तस्य जलायते जलनिधिः कुल्यायते तत्क्षणा-न्मेरुः स्वल्पशिलायते मृगपतिः सद्यः कुरङ्गायते।
व्यालो माल्यगुणायते विषरसः पीयूषवर्षायते,यस्याङ्गेऽखिललोकवल्लभतरं शीलं समुन्मीलति ॥७८॥
नीतिशतके

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# इच्छार्थकः 'क्यच्'प्रत्ययः

लघुसिद्धान्तकौमुद्याम् (तिङन्ते नामधातवः)

आत्मनः पुत्रम् इच्छति

इच्छाक्रियाकर्तृसम्बन्धिनः

इच्छाक्रियाकर्मीभूतात्

लौकिकविग्रहः— पुत्रम् इच्छति।

अलौकिकविग्रहः— पुत्र अम् क्यच्

(सनाद्यन्ता धातवः)

पुत्र य> पुत्रीय

पुत्रीय+ लँट्/तिप्

पुत्रीय शप्+ ति

पुत्रीय अ+ ति = पुत्रीयति

❖ क्यच्-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— सुँप आत्मनः क्यच् (३,१.८)

अर्थः— इषिकर्मण एषितुः सम्बन्धिनः सुबन्तादिच्छायामर्थे क्यच् प्रत्ययो वा स्यात्॥

❖ सुपो लुक्-विधायकं विधिसूत्रम्—

सूत्रम्— सुँपो धातुप्रातिपदिकयोः (२,४.७१)

अर्थः— एतयोरवयवस्य सुँपो लुक्॥

❖ ईकारादेश-विधायकं विधिसूत्रम्—

सूत्रम्— क्यचि च (७,४.३३)

अर्थः— अवर्णस्य ईः।

आत्मनः पुत्रमिच्छति— पुत्रीयति॥

# क्यचि क्यङि च पदत्वनिरूपणम्



लौकिकविग्रहः— (आत्मनः) राजानम् इच्छति।

अलौकिकविग्रहः— राजन् अम् क्यच्

सुँपो धातुप्रातिपदिकयोः — राजन् य

पदत्वात् 'नलोपः प्रातिपदिकान्तस्य'— राज य

क्यचि च — राजीय (सनाद्यन्ता धातवः)

राजीय अ (शप्) + ति = राजीयति

❖ पदसञ्ज्ञाविषये नियमसूत्रम्—

सूत्रम्— नः क्ये (१,४.१५)

अर्थः— क्यचि क्यङि च नान्तमेव पदं नान्यत्।

नलोपः। राजीयति।

नान्तमेवेति किम्? वाच्यति।

हलि च— गीर्यति। पूर्यति।

धातोरित्येव, नेह — दिवमिच्छति दिव्यति॥

क्विँबन्ता विँजन्ता विँडन्ताः शब्दाः धातुत्वं न जहति। गॄ+ क्विँप्= गिर्। पॄ+ क्विँप्= पुर्। 'दिव्' इति शब्दस्त्व्युत्पन्नप्रातिपदिकमतो न दीर्घः।

लौकिकविग्रहः— आत्मनो वाचम् इच्छति।

अलौकिकविग्रहः— वाच् अम् क्यच्

पदान्तत्वाभावात् 'कुत्वजश्त्वे न'— वाच् य

वाच्य अ (शप्) + ति = वाच्यति

दिव्+ य= दिव्य

दिव्य अ + ति = दिव्यति।

आत्मनो गिरम्,पुरम् इच्छति।

गिर् अम् य, पुर् अम् य

गीर्+ य= गीर्य , पूर्+ य= पूर्य

गीर्य अ + ति = गीर्यति। पूर्यति।

# क्यस्य विभाषा



(आत्मनः) समिधम् इच्छति।
समिध् अम् क्यच्
समिध् य
'न क्ये इति नियमाश्रयणात् जश्त्वं न'—
समिध्य अ (शप्) + ति = समिध्यति

समिध्य + इता
समिध् अ + इता
समिध् + इता
समिधिता,
क्यस्य विभाषा –
समिध्यिता (अतो लोपः)

समिध्यति। (लघुसिद्धान्तकौमुदीसंस्करणेष्विदं पाठो न दृश्यते। किन्तु प्रसङ्गानुकूलम् अयं पाठो मध्यसिद्धान्तकौमुदीतः गृहीतः।)

❖ लोप-विधायकं विधिसूत्रम्—

**सूत्रम्— क्यस्य विभाषा (६,४.५०)**

**अर्थः—** हलः परयोः क्यच्क्यङोर्लोपो वार्धधातुके। आदेः परस्य। अतो लोपः। तस्य स्थानिवत्त्वाल्लघूपधगुणो न। समिधिता, समिध्यिता॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# इच्छार्थक 'काम्यच्' प्रत्ययः

लघुसिद्धान्तकौमुद्याम् (तिङन्ते नामधातवः)

आत्मनः पुत्रम् इच्छति

इच्छाक्रियाकर्तृसम्बन्धिनः | इच्छाक्रियाकर्मीभूतात्

लौकिकविग्रहः— पुत्रम् इच्छति।
अलौकिकविग्रहः—पुत्र अम् काम्यच्
(सुँपो धातुप्रातिपदिकयोः) (सनाद्यन्ता धातवः)
पुत्रकाम्य
पुत्रकाम्य अ (शप्)+ ति
पुत्रकाम्यति

❖ काम्यच्-विधायकं विधिसूत्रम्—
सूत्रम्— काम्यच्च (३,१.९)
अर्थः— उक्तविषये= इषिकर्मण एषितुः सम्बन्धिनः सुबन्तादिच्छायामर्थे काम्यच् (वा) स्यात्।
पुत्रमात्मन इच्छति— पुत्रकाम्यति। पुत्रकाम्यिता॥

पुत्रकाम्य + ति (लुँट्)
पुत्रकाम्य तास् + आ (डा)
पुत्रकाम्य् + इता (अतो लोपः)
पुत्रकाम्यिता

समानार्थकाः— पुत्रीयति/ पुत्रकाम्यति/ आत्मनः पुत्रम् इच्छति।

# आचारेऽर्थे= व्यवहारार्थे क्यच्-प्रत्ययस्य निरूपणम्






## उपमानम्

पुत्रम् इव आचरति छात्रम्।

उपमानम् — उपमेयः

विष्णुम् इव आचरति द्विजम्।

यस्य सादृश्यमन्यत्र निरूप्यते तदुपमानम्।

'चन्द्र इव मुखम्' इत्यत्र चन्द्र उपमानं मुखं उपमेयः।




## उपमेयः

उपमानभिन्नत्वे सति उपमानगत-सम्भाव्यमानानेकधर्मवत्वमुपमेयत्वम्।

विष्णु अम् क्यच्
विष्णु य
विष्णूय (अकृतसार्वधा..)
विष्णूय अ (शप्) + ति =
विष्णूयति (द्विजं राजा)।

### ❖ क्यच्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्—** उपमानादाचारे (३,१.१०)

**अर्थः—** उपमानात्कर्मणः सुबन्तादाचारेऽर्थे क्यच्। पुत्रमिवाचरति पुत्रीयति छात्रम्। विष्णूयति द्विजम्॥

**अकारान्तस्योदाहरणम्**

लौकिकविग्रहः— पुत्रम् इव आचरति (छात्रम्)।
अलौकिकविग्रहः— पुत्र अम् क्यच्
सुँपो धातुप्रातिपदिकयोः — पुत्र य
क्यचि च — पुत्रीय
पुत्रीय अ (शप्) + ति = पुत्रीयति (छात्रं गुरुः)।

(आत्मनः) पुत्रम् इच्छति/ पुत्रम् इव आचरति— पुत्रीयति

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# आचारेऽर्थे क्विँप्-प्रत्ययस्य निरूपणम्

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते नामधातवः)

लौकिकविग्रहः— कृष्ण इव आचरति (नटः)।

अलौकिकविग्रहः— कृष्ण क्विँप्

प्— हलन्त्यम्, इ— उपदेशेऽजनुनासिक इत्
क्— लशक्वतद्धिते, व्— वेरपृक्तस्य

इत्
सर्वापहारी लोपः

कृष्ण

कृष्ण अ (शप्) + ति = कृष्णति (नटः)।

कृष्णति शिशुः। ✓

कृष्णति शिशुम्। ✗

❖ क्विँप्-प्रत्ययविधायकं वार्तिकम्—

सर्वप्रातिपदिकेभ्यः क्विँब्वा वक्तव्यः।

अर्थः— उपमानवाचिनः कर्तुः प्रातिपदिकमात्राद् आचारेऽर्थे क्विँप् प्रत्ययः स्यात्।

अतो गुणे। कृष्ण इवाचरति कृष्णति।

स्व इवाचरति स्वति। सस्वौ॥

लौकिकविग्रहः— स्व इव आचरति।

अलौकिकविग्रहः— स्व क्विँप्

स्व

स्व अ (शप्) + ति = स्वति

स्व स्व + अ
स स्व + अ
स स्वा + अ
स स्वा + औ
= सस्वौ

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# आचारेऽर्थे क्विँप्-प्रत्ययस्य निरूपणम्



❖ उपधा-दीर्घविधायकं विधिसूत्रम्—

सूत्रम्— अनुनासिकस्य क्विँ-झलोः क्ङिति (६,४.१५)

अर्थः— अनुनासिकान्तस्योपधाया दीर्घः स्यात्क्वौ झलादौ च क्ङिति।

इदमिवाचरति इदामति। राजेव राजानति। पन्था इव पथीनति॥

लौकिकविग्रहः— इदमिवाचरति।
अलौकिकविग्रहः— इदम् क्विँप्

इदम्

इदाम्

इदाम् अ (शप्) + ति = इदामति

लौकिकविग्रहः— राजा इव आचरति।
अलौकिकविग्रहः— राजन् क्विँप्

राजन्

राजान्

राजान् अ (शप्) + ति = राजानति

पन्था इव आचरति।
पथिन् क्विँप्

पथिन्

पथीन्

पथीन् अ + ति =
पथीनति

❖ क्यङ्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्**— कष्टाय क्रमणे (२,१.१४)

**अर्थः**— चतुर्थ्यन्तात् कष्टशब्दादुत्साहेऽर्थे क्यङ् स्यात्।

○ कष्टाय क्रमते— कष्टायते। पापं कर्तुमुत्सहत इत्यर्थः॥

लौकिकविग्रहः— कष्टाय क्रमते।
अलौकिकविग्रहः— कष्ट ङे क्यङ्
सुँपो धातुप्रातिपदिकयोः – कष्ट य
अकृतसार्वधातुकयोर्दीर्घः— कष्टाय
कष्टाय अ (शप्) + ते = कष्टायते।

क्यङन्ताद् आत्मनेपदं भवति।

# करणे= करोत्यर्थे क्यङ्-प्रत्ययस्य निरूपणम्



❖ क्यङ्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— शब्द-वैर-कलहाभ्र-कण्व-मेघेभ्यः करणे (३,१.१७)**

**अर्थः— एभ्यः कर्मभ्यः करोत्यर्थे क्यङ् स्यात्।**

○ शब्दं करोति— शब्दायते॥

लौकिकविग्रहः— शब्दं करोति।

अलौकिकविग्रहः— शब्द अम् क्यङ्

सुँपो धातुप्रातिपदिकयोः – शब्द य

अकृतसार्वधातुकयोर्दीर्घः— शब्दाय

शब्दाय अ (शप्) + ते = शब्दायते।

✓ वैरं करोति— वैरायते।

✓ कलहं करोति— कलहायते।

✓ अभ्रं करोति— अभ्रायते।

✓ कण्वं करोति— कण्वायते।

✓ मेघं करोति— मेघायते।

# ‘तत्करोति तदाचष्टे’ इत्यर्थयोः णिच् प्रत्ययः



❖ णिच्-प्रत्ययविधायकम्—

**गणसूत्रम्— (तत्करोति तदाचष्टे) इति णिच्॥**

अर्थः— द्वितीयान्तात्प्रातिपदिकात् ‘तत्करोति’ इत्यर्थे ‘तदाचष्टे= वदति’ इत्यर्थे वा णिच् स्यात्।

❖ णिच्-प्रत्ययविधायकम् इष्टवद्भावविधायकञ्च—

**गणसूत्रम्— प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च।**

अर्थः— प्रातिपदिकाद्धात्वर्थे णिच् स्यात्, इष्ठे यथा प्रातिपदिकस्य पुंवद्भाव[१]-रभाव[२]-टिलोप[३]-विन्मतुब्लोप[४]-यणादिलोप[५]-प्रस्थस्फाद्यादेश[६]-भसंज्ञा[७]स्तद्वण्णावपि स्युः।

○ इत्यल्लोपः। घटं करोत्याचष्टे वा घटयति॥

लौकिकविग्रहः— घटं करोति/ आचष्टे।

अलौकिकविग्रहः— घट अम् णिच्

सुँपो धातुप्रातिपदिकयोः – घट इ

इष्टवद्भावकारणाद् भसंज्ञातिदेशः

यस्येति च— घटि

घटि अ + ति

घटे अ + ति

घट् अय् अ + ति

घटयति, घटयते (णिचश्च)

**इति नामधातवः**

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः



धातु-प्रातिपदिकञ्चोभये

# अथ कण्ड्वादयः



❖ यक्-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— कण्ड्वादिभ्यो यक् (३,१.२७)

अर्थः— एभ्यो धातुभ्यो नित्यं यक् स्यात्स्वार्थे।

❑ कण्डूञ् गात्रविघर्षणे॥ १॥

कण्डूयति। कण्डूयत इत्यादि॥

॥ इति कण्ड्वादयः ॥

धातुप्रकरणाद्धातुः कस्य चासञ्जनादपि।
आह चायमिमं दीर्घं मन्ये धातुर्विभाषितः॥

कण्डू+ यक्
कण्डूय (सनाद्यन्ताः धातवः)
कण्डूय अ+ ति/ते (अतो गुणे)
कण्डूयति। कण्डूयते

स्वं= प्रकृतिः, तस्यार्थः= स्वार्थः।

यदा कण्डूशब्दः प्रातिपदिकः तदा नित्यस्त्रीलिङ्गत्वाद् वधूशब्दवद्रूपाणि लभते।

**०१. एषु क्यच् प्रत्ययो न भवति—**

क. इच्छायाम्

ख. सुबन्तात्

ग. एषितुः सम्बन्धिनः

**घ. इषिकरणे**

**०२. एतेषु कस्मिन्नर्थे लघुसिद्धान्तकौमुद्यां नामधातुप्रत्ययविधानं नास्ति—**

क. आचारे

ख. करणे

ग. तदाचष्टे

**घ. अपादाने**

**०३. आत्मनः पुत्रमिच्छति—**

क. पुत्रति

**ख.पुत्रीयति**

ग. पुत्रायते

घ. पुत्र्यते

**०४. 'जलायते' इत्यत्र कः प्रत्ययः—**

क. क्यच्

**ख.क्यङ्**

ग. क्विप्

घ. णिच्

**०५. 'देवदत्त आत्मनः पुत्रम् इच्छति' इत्यत्र इच्छाक्रियाकर्तृसम्बन्धी तथा इच्छाक्रियाकर्म किम् ?**

क. आत्मनः

**ख.पुत्रम्**

ग. इच्छति

घ. देवदत्तः

**०६. 'पुत्र अम् क्यच्' अमो लुक् केन भवति—**

क. सुँप आत्मनः क्यच्

**ख.सुँपो धातुप्रातिपदिकयोः**

ग. क्यचि च

घ. अव्ययदाप् सुपः

**०७. एतेषु पदसञ्ज्ञकं किम् ?**

**क.राजन् क्यच्**

ख. वाच्   क्यच्

ग. दिव्   क्यच्

घ. समिध्  क्यच्

**०८. आत्मनो दिवमिच्छति— 'दिव्यति' इत्यत्र 'हलि चे'त्यनेन दीर्घः कथं न भवति?**

क. वान्ताभावात्

**ख.धातुत्वाभावात्**

ग. क्यजन्तत्वात्

घ. पदान्तत्वात्

**०९. 'काम्यच्'प्रत्ययः कस्मिन्नर्थे भवति—**

**क. इच्छायाम्**

ख. करणे

ग. उत्साहे

घ. आचारे

**१०. 'पुत्रम् इव आचरति छात्रम्' इत्यत्र उपमानं किम्?**

**क. पुत्रम्**

ख. इव

ग. आचरति

घ. छात्रम्

**११. 'कृष्ण इवाचरति नट' इत्यत्र किं रूपम्—**

क. कृष्णीयते

ख. कृष्णीयति

**ग. कृष्णति**

घ. कृष्णाति

**१२. एतेष्वशुद्धं चिनुत—**

क. कृष्णति शिशुः।

**ख. कृष्णति शिशुम्।**

ग. गुरुः छात्रं पुत्रीयति।

घ. गुरुः पुत्रीयति।

**१३. 'स्वति' इत्यस्य कोऽर्थः—**

क. स्वस्तिः

ख. स्वाति

**ग. स्व इवाचरति**

घ. स्वः पुत्रम् इच्छति

**१४. पन्था इव आचरति—**

क. पथ्यति

ख. पन्थानति

**ग. पथीनति**

घ. पथीयति

**१५. 'सर्वप्रातिपदिकेभ्यः क्विँब्वा वक्तव्यः' इति विषये इदं कथनमसङ्गतम्—**

क. प्रातिपदिकमात्राद् अयं विधीयते।

ख. उपमानवाचिनः कर्तुरयं विधीयते।

ग. आचारेऽर्थे क्विँप्प्रत्ययो भवति।

**घ. सुबन्तात् क्विँप्प्रत्ययो भवति।**

**१६. 'इदामति' इत्यत्र दीर्घः केन भवति—**

क. सर्वप्रातिपदिकेभ्यः क्विँब्वा वक्तव्यः।

**ख. अनुनासिकस्य क्विँ-झलोः क्ङिति।**

ग. अतो दीर्घो यञि।

घ. क्यचि च

**१७. 'कष्टायते' इत्यस्य कोऽर्थः—**

क. कष्ट इवाचरति।

**ख. पापं कर्तुमुत्सहते।**

ग. आत्मनः कष्टमिच्छति।

घ. कष्टमनुभवति।

**१८. 'वैरायते' इत्यत्र केन सूत्रेण कः प्रत्ययः?**

क. शब्द-वैर-कलहाभ्र-कण्व-मेघेभ्यः करणे— क्यच्

ख. शब्द-वैर-कलहाभ्र-कण्व-मेघेभ्यः करणे— क्यङ्

ग. सुँप आत्मनः क्यच्— क्यच्

सर्वप्रातिपदिकेभ्यः क्विँब्वा वक्तव्यः— क्यङ्

**१९. शब्दं करोति— शब्दायते इत्यत्र दीर्घः केन—**

क. सुँपो धातुप्रातिपदिकयोः

**ख.अकृतसार्वधातुकयोर्दीर्घः**

ग. शब्द-वैर-कलहाभ्र-कण्व-मेघेभ्यः करणे

घ. अनुनासिकस्य क्विँ-झलोः क्ङिति

**२०. नामधातौ णिच् प्रत्ययः कस्मिन्नर्थे भवति—**

क. इच्छायाम्

ख. करणे

**ग. तत्करोति तदाचष्टे**

घ. आचारे

**२१. 'आचष्टे' इत्यस्य कोऽर्थः—**

क. आस्वादति।

**ख.वदति।**

ग. चेष्टते।

घ. प्रकटयति।

**२२. 'घटयति, घटयते' इत्यत्र इष्टवत् कस्य कार्यस्यातिदेशः—**

**क. भसंज्ञायाः**

ख. टिलोपस्य

ग. दीर्घस्य

घ. यणादिलोपस्य

**२३. इष्टवत्कार्याणि कियन्ति सन्ति—**

क. अष्टौ

ख. नव

ग. पञ्च

**घ. सप्त**

**२४. यक् प्रत्ययः कस्मिन् अर्थे भवति—**

क. आचारे

**ख.स्वार्थे**

ग. करणे

घ. भावे

**२५. कण्वादिप्रकरणे पठितशब्दाः सन्ति—**

क. धातवः

ख. प्रातिपदिकानि

**ग. उभयम्**

घ. नोभयम्